Pt-3

Kolachalamallinath Suri
कोलाचलमल्लिनाथ सूरि
Kiratarjuniya Kavya with tika-Pt3
किरातार्जुनीय काव्ये टीका सहित - भा.३
Sanskrit
Paper
Printed
157 years old
10" x 4,8"
Complete

श्रीगणेशायनमः ॥ द्वाभ्यांयुग्ममितिप्रोक्तंत्रिभिः श्लोकैर्विशेषकं कालापकंचतुर्भिःस्यात्तदूर्ध्वंकुलकंस्मृतं अथत्रि
भिर्मुनिंविशिष्य चतुर्भिः कालापकमाह ततइति ततःउपवेशनानंतरं धर्मात्मजोयुधिष्ठिरः शरच्चंद्रकराइवअभि
रामैः आल्हादकैरित्यर्थः उत्सर्पिभिः ऊर्ध्वप्रसारिभिरित्यर्थः अंशुजालैः प्रांशुंउन्नतमिवस्थितमित्युत्प्रेक्षा पुनः आनी
लरुचंकृष्णावर्णंपिशंगीः पिंगटवर्णाः गौरादित्वात्ङीप् जटाःबिभ्राणंधारयंतं अतएवतडित्वंतं विद्युद्युक्तं अंबुवाह

ततः शरच्चंद्रकराभिरामैरुत्सर्पिभिःप्रांशुमिवांशुजालैः बिभ्राणमानीलरुचं
पिशंगीर्जटास्तडित्वंतमिवांबुवाहं १ प्रसादलक्ष्मींदधतंसमग्रांवपुःप्रकर्षेण
जनातिगेन प्रसह्यचेतःसुसमासजंतमसंस्तुतानामपिभावमार्द्रम् २

मिवस्थितं इत्युत्प्रेक्षा १ प्रासादलक्ष्मीमिति पुनः समग्रांसंपूर्णांप्रसादः सौम्यतातस्यलक्ष्मींसंपदंदधतं अतएव
जनमतिगच्छतीतिजनातिगेन लोकातिशायिना अतोन्यत्रापिदृश्यतइतिडप्रत्ययः वपुःप्रकर्षेणाकारसंपदा असं
स्तुतानामपरिचितानामपि व्यासोयमित्यजानतामपीत्यर्थः संस्तवःस्यात्परिचयइत्यमरः चेतःसुचित्तेषु आर्द्रंस्नेहा १
र्द्रं भावमभिप्रायं प्रसह्यबलात् समासजंतं लगयंतमित्यर्थः दंशसंजस्वंजांशपीत्युपधालोपः प्रसन्नाकारेषुसर्वोपिस्नि
ह्यतीतिभावः २

पुनरनुद्धताकारतयाशांताकारत्वेनलिंगेनातःकरणस्यवृत्तिं विविक्तांपूतांशांतामितियावत् विविक्तौपूतविजनावि
त्यमरः तन्वंतंप्रकटयंतं आकृतिरेवास्यचित्तशुद्धिंकथयतीत्यर्थः पुनर्माधुर्यैनिसर्गसौम्यताविस्रंभोविश्वासस्तयोः
विशेषंअतिशयंभजतीतितथोक्तेनेक्षितेनदर्शनेनैवकृताउपसंभाषाउपसंभाषणंयेनतमिवस्थितमित्यर्थः का
शिकायांतूपसंभाषाउपसांत्वनमितिभासनादिसूत्रे ३ धर्मात्मजइति पुनः सधर्मेनिबध्नंतीतिधर्मनिबंधि-

अनुद्धताकारतयाविविक्तांतन्वंतमंतःकरणस्यवृत्तिं माधुर्यविस्रंभविशेष
भाजाकृतोपसंभाषमिवेक्षितेन ३ धर्मात्मजोधर्मनिबंधिनीनांप्रसूति
मेनःप्रणुदांश्रुतीनां हेतुंतदभ्यागमनेपरीप्सुः सुखोपविष्टंमुनिमाबभाषे ४

नीनामाग्निहोत्रादिधर्मप्रतिपादिकानामेनःप्रणुदांअघच्छिदांक्विप् श्रुतीनांवेदानां श्रुतिःस्त्रीवेदआम्नायस्त्रयीध
र्मस्तुतद्विधिरित्यमरः प्रसूतिंप्रभवंसुखेनउपविष्टंमुनिं तदभ्यानमनेतस्यमुनेःआगमने हेतुंपरीप्सुः जिज्ञासुः
धर्मात्मजः आप्नोतेःसन्नंतादुप्रत्ययः आप्ज्ञप्यृधामीदित्तीकारः अत्रलोपोभ्यासस्येत्यभ्यासलोपः आब
भाषे उवाच ४

अनाप्तपुण्येति अनाप्तपुण्योपचयैः अकृतपुण्यसंग्रहैः दुरापा दुर्लभा फलस्य सवित्री श्रेयस्करीत्यर्थः निर्धूत रजाः हृतरजोगुणा अन्यत्र निरस्तधूलिश्च रजो रजोगुणे धूलौ परागार्तवयोरपीति शाश्वतः एषा भवद्दर्शनस्य

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री
तुल्या भवद्दर्शनसंपदेषा वृष्टेर्दिवो वीतबलाहकायाः ५

संपत्संपत्तिर्लाभ इतियावत् संपदादिभ्यः क्विपो भावार्थकत्वात् वीतबलाहकाया निर्मेघाया दिवोंतरिक्षस्य संबंधिन्याः वृष्टेस्तुल्येत्युपमालंकारः अनभ्रवृष्टिवदतर्कितोपपन्नं भवद्दर्शनं सर्वथा कस्यचिच्छ्रेयसो निदानमित्यर्थः वारिवहतीति बलाहकः पृषोदरादित्वात्साधुः ५ ७ ७ ७ २

अद्येति अद्यक्रतूनांक्रियाअनुष्ठानानिकामान्दुहंतीतिकामदुघाः फलदाइत्यर्थः दुहःकप्घश्चेतिकप्रत्ययः घादेश-
श्चसंप्रतिअद्य भूमिदेवाः ब्राह्मणाः द्विजात्यग्रजन्मभूदेववाडवाः विप्रश्चब्राह्मणोसावित्यमरः सत्याशिषोजाताः ब्राह्मणा
शिषोद्यफलिताइत्यर्थः यद्यतः कारणात् त्वयागतेसति त्वदागमनेननिमित्तेनेत्यर्थः अस्मीत्यहमर्थे व्ययं अस्मीत्य

अद्यक्रियाःकामदुघाःक्रतूनांसत्याशिषःसंप्रतिभूमिदेवाः
आसंसृतेरस्मिजगत्सुजातस्त्वय्यागतेयद्बहुमानपात्रं ६

स्मदर्थानुवादे अहमर्थेपीतिगणव्याख्यानेदासेकृतागसिभवत्सुचित्तः प्रभूणांपादप्रहारइतिसुंदरिनास्मिदूये उद्य
त्कठोरपुलकांकितकंटकाग्रैर्यत्खिद्यतेमृदुपदंतवसाव्यथामइतिप्रयोगश्च आसंसृतेरासंसारमित्यर्थः आंभिवि
धावाङ्विकल्पादसमासः जगत्सुबहुमानपात्रंजातःसर्वसत्कर्मफलभूतंत्वदागमनंयेनमेजगन्मान्यतेतिभावः ६

श्रियमिति आत्मयोनेः ब्रह्मणइवलोकगुरोस्तवामोघंअविफलंदर्शनंश्रियंविकर्षत्याकृष्यद्दाति अघानिदुःखानिअ पहंतिनाशयंति अंहोदुःखव्यसनेष्वघमित्यमरः श्रेयःपुरुषार्थंपरिस्नौतिस्नवतिकीर्तिंतनोति किंबहुनाकिंनधत्ते किंनकरोति अपितुसर्वंकरोतीत्यर्थः ७ श्रोतदिति हेभगवन् श्रोतन्मयूखेसुधास्रावविकारेहिमद्युतावपि विषये



श्रियंविकर्षत्यपहंत्यघानिश्रेयःपरिस्नौतितनोतिकीर्तिं संदर्शनंलोकगु रोरमोघंतवात्मयोनेरिवकिंनधत्ते ७ श्रोतन्मयूखेपिहिमद्युतौमेननिर्वृतं निर्वृतिमेतिचक्षुः समुज्झितज्ञातिवियोगखेदंत्वत्सन्निधावुच्छ्वसितीवचेतः ८

ननिर्वृतं अनिर्वृतं नञर्थस्यनशब्दस्यसुप्सुपेतिसमासः मेचक्षुस्त्वत्संनिधौनिर्वृतिंसुखमेति तथाचेतश्चसमुज्झित- ज्ञातिवियोगखेदंत्यक्तबंधुविरहदुःखंसमुच्छ्वसतीव अनुरोधेनप्राणितीवेत्युत्प्रेक्षा पूर्वार्द्धेतुनिवृत्तिकारणेसत्यपिइंदा वनिर्वृतिकथनाद्विशेषोक्तिः तदुक्तं तत्सामग्र्यामनिष्पत्तिर्विशेषोक्तिर्निगद्यतइति ८ ७ ७ ३

निरास्पदमिति प्रश्नकुतूहलित्वं निरास्पदं आगमनप्रयोजनप्रश्नो निरास्पद इत्यर्थः आस्पदं प्रतिष्ठायामिति निपात्तः
प्रश्नानवकाशे हेतुमाह निःस्पृहाणां युष्मत्सदृशानामिति शेषः अस्मास्वधीनमायत्तं किमु नकिंचिदस्मत्तो लभ्यमित्यर्थः
आधारत्वविवक्षायां सप्तमी तथापि कल्याणकरीं अस्माद्धितैकहेतुमित्यर्थः निःस्पृहप्रवृत्तेः परार्थ्यादिति भावः कृञो हेत्वि

निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निःस्पृहाणां
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ९

त्यादिना टप्रत्यये ङीप् अतस्ते गिरं श्रोतुमिच्छा मां मुखं वागस्यास्तीति मुखरं मुखरो निरंतरभाषी मुखकुंजेभ्यो रोवक्तव्य
इत्ति रप्रत्ययः अमुखरः मुखरः संपद्यते तथा करोति वाचालं करोति दुर्मुखे मुखराबद्धमुखावित्यमरः ततः श्विप्रत्ययः
मुखरीकरोति व्यापारयतीत्यर्थः निःस्पृहस्यापि ते वाक्यमस्मत् सिद्धिकरत्वाच्छ्रोतव्यमित्यर्थः ९

इतीति इतीत्थमुक्तिविशेषरम्यमुक्तिवैचित्र्यचारुयथा तथोक्तवानुदारचेताः महामनानरेंद्रः द्वैपायनेनद्वीपमयनं-
स्थानंजन्मभूमिर्यस्य द्वीपायनः सएवद्वैपायनोव्यासस्तेन प्रज्ञादिभ्य इतिस्वार्थेअण्प्रत्ययः नापत्यार्थेनडादिभ्यः
फक् तेष्वपाठात् बाधितार्थत्वाच्च जयोपपत्तौमनःसमाधाय जयसिद्धिमपेक्ष्येत्यर्थः इतिवक्ष्यमाणप्रकारामुदारा
मर्थवतीं गिरमभिदधेउक्तः अप्रधानेदुहादीनांण्यंते कर्तुश्चकर्मणइतिवचनात् १० चिचीषतामिति आदौताव



इत्युक्तवानुक्तिविशेषरम्यंमनःसमाधायजयोपपत्तौ उदारचेतागिरमित्यु
दारांद्वैपायनेनाभिदधेनरेंद्रः १० चिचीषतांजन्मवतामलघ्वींयशोवतंसामु
भयत्रभूतिं अभ्यर्हिताबंधुषुतुल्यरूपावृत्तिर्विशेषेणतपोधनानां ११

त् स्वस्यमाध्यस्थ्यभंगदोषंसुग्मेनपरिहरति अलघ्वींगुर्वी वोतोगुणवचनादितिङीष् यशोवतंसांकीर्तिभूषणां-
उभयत्रइहपरत्रचभूतिंश्रेयश्चिचिषितांचेतुंसंगृहीतुमिच्छतां चिनोतेःसन्नंताच्छतृप्रत्ययः जन्मवतांशरीरिणां ४
बंधुषुविषये तुल्यरूपाएकविधावृत्तिर्व्यवहारोभ्यर्हिताउचिता तपोधनानांतस्माद्दशांविशेषेणनियमेनअभ्यर्हिता
११

तथापीति तथापितुल्यवृत्तौविशेषेपि हेनृपतावकीनैस्त्वदीयैः युष्मदस्मदोरन्यतरस्यांइतिखञ्प्रत्ययः तवकममका वेकवचनइतितवकादेशः गुणौघैर्गुणसमूहैः प्रह्वीकृतं आवर्जितंमेहृदयंनिघ्नंत्वदायत्तं अधीनोनिघ्नआयत्तोइत्य मरः ननुनिःस्पृहस्यतवकोयंपक्षपातइत्यत्राह वीतेति वीतस्पृहाणां विरक्तानां मुक्तिभुजां मुमुक्षूणामपीत्यर्थः

तथापिनिघ्नंनृपतावकीनैः प्रह्वीकृतंमेहृदयंगुणौघैः वीत
स्पृहाणामपिमुक्तिभाजांभवंतिभव्येषुहिपक्षपाताः १२

भवंतीतिभव्याः साधवः भव्यगेयेत्यादिनासूत्रेण कर्त्तरिनिपातः तेषुविषयेपक्षपाताः स्नेहाः भवंति न-
तुसाध्वनुग्रहोमहतांमाध्यस्थ्यभंजकइतिभावः १२ ७ ७ ७

सुताइति अथनृपस्यगुणवत्तांप्रकटयितुं धृतराष्ट्रस्यदुश्चेष्टामुद्घाटयति यूयंतस्यराज्ञोधृतराष्ट्रस्यसुताः नकिंसु
सुताएवेत्यर्थः गुणैः शांतिदानदाक्षिण्यादिभिः सुयोधनंनातीताः नातिक्रांताः अतीताएवेत्यर्थः कर्तरिक्तः अ
सुतत्वं अगुणत्वंच त्यागेहेतुस्तत्तुयुष्मासु नास्तीतिभावः उपालंभेकारणमाह यइति योधृतराष्ट्रोवोयुष्मान्त्य

सुतान्नयूयंकिमुतस्यराज्ञः सुयोधनंवानगुणैरतीताः यस्त्य
क्तवान्सवृथाबलाद्वामोहंविधत्तेविषयाभिलाषः १३

क्तवान्सवृथा निष्कारणमेवत्यक्तवान् यदिवयंपुत्रागुणाधिकाश्च तर्हिकथमस्यासीत्तत्राह बलादिति वि
षयाभिलाषः भोगतृष्णाबलाद्वा बलात्कारादेव वास्याद्विकल्पोपमयोरिवार्थेपिसमुच्चयइतिविश्वः मोहमवि ५
वेकंविधत्ते विषयाभिलाषातिरिक्तोनकश्चिद्युष्मत्त्यागेहेतुरित्यर्थः अत्रकारणकार्यसमर्थनरूपोर्थांतरन्यासः
१३

अथराज्ञउत्साहवर्द्धनायशत्रोर्हानिंसूचयति जहात्विति एनंधृतराष्ट्रमर्थसिद्धिः कथंनजहातु जहात्वेवेत्यर्थः प्रैषातिसर्गप्राप्तकालेषुकृत्याश्चेति प्राप्तकालेलोट् हानिकालस्तस्यप्राप्तइत्यर्थः कुतः योधृतराष्ट्रः संशय्यसंदिह्य कर्णादिषुतिष्ठते कर्णादीन् दुर्मंत्रिणः संदिग्धार्थनिर्णेतृत्वेनावलंबतइत्यर्थः प्रकाशस्थेयाख्ययोश्चेतिस्थे

जहातुनैनंकथमर्थसिद्धिःसंशय्यकर्णादिषुतिष्ठतेयः
असाधुयोगाहिजयांतरायाः प्रमाथिनीनांविपदांपदानि १४

याख्यायामात्मनेपदं तिष्ठंत्यस्मिन्निति स्थेयोविवादपदनिर्णेताइतिकाशिकायां तथाहि असाधुयोगाद्दुर्जनसंगतयोजयांतरायाः जयविघातकाः किंचप्रमाथिनीनामुन्मूलनशीलानांविपदांविपत्तीनांपदानिस्थानानि भवंतिपदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः नकेवलंजयविघाताः किंत्वनर्थकारिणश्चेतिभावः धृतराष्ट्रोपिदुर्जनविधेयत्वाद्विनश्यतीत्यर्थः १४

एवंशत्रोरनर्थंसूचयित्वाराज्ञोऽर्थसिद्धिंसूचयति पथइति रिपूणांसमितौसभायां सभासमितिसंसदइत्यमरः पथश्च्युतायांमार्गात्भ्रष्टायांसत्यां दुरात्मनोः दुःशासनस्यस्त्रीसंग्रहणसाहसमंगीकृतवत्यामित्यर्थः चिरायध

पथश्च्युतायांसमितौरिपूणांधर्म्यांदधानेनधुरंचिराय
त्वयाविपत्स्वप्यविपत्तिरम्यमाविष्कृतंप्रेमपरंगुणेषु १५

र्म्यांधर्मादनपेतां धर्मपथ्यर्थन्यायादनपेतइतियत्प्रत्ययः धुरंभारंदधानेन कृच्छ्रेष्वपिधर्मादचलतेत्यर्थः त्वयाविपत्स्वपिअविपत्तिदुःखेष्वपिअविनाशिअतएवरम्यंमनोहरंगुणेषुविषये परमुत्कटं प्रेमाविष्कृतंप्रकटीकृतं दुःसहमपिसोढवतात्वयासाधुकृतमितिभावः १५

विधायेति किंच शमएवएकामुख्याऍवृत्तिर्यस्यतस्य अपरोपत्तापिन इत्यर्थः भवतश्छलेनकपटेन आत्मनेहित्तःआ
त्मनीनः सनभवतीत्यनात्मनीनः स्वस्यैवानर्थहेतुरित्यर्थः तंआत्मन् विश्वजनभोगोत्तरपदात्खइतिखप्रत्ययः वि
ध्वंसमपकारंविधायकृत्वा प्रकाशित्तः प्रख्यापित्तः त्वन्मतिशीलयोस्तवप्रज्ञासद्वृत्तयोःसारः प्रकर्षोयैस्तेत्तथोक्तास्ते
तवविद्विषः कृतोपकाराइवोपकृतवंतइव अपकारोप्युपकारायैवसंवृत्तः तदसौजन्यंतवसौजन्यंचजगतिसुव्य

विधायविध्वंसमनात्मनीनंशमैकवृत्तेर्भवतश्छलेन प्रकाशितत्वन्मतिशीलसाराः
कृतोपकाराइवविद्विषस्ते १६ लभ्याधरित्रीत्तवविक्रमेणज्यायांश्चवीर्यास्त्रब
लैर्विपक्षः अतःप्रकर्षायविधिर्विधेयःप्रकर्षतंत्राहिरणेजयश्रीः १७

क्तमासीदित्यर्थः विद्यमानाअपिसुजनस्यगुणाश्चंदनदारुणइवपरिभवेएवप्रत्युराभवंतीतिभावः १६ अथप्रयो
जनांतरमाह लभ्येति तवलभ्येत्यर्थः कृत्यानांकर्तरिवेतिषष्ठी धरित्रीविक्रमेणलभ्या प्राप्तव्या त्वद्दिनानसुलभेत्या
ह विपक्षश्चशत्रुरपिवीर्यैशौर्यमस्त्राण्याग्नेयादीनिबलानिसैन्यानि तैर्ज्यायान् प्रशस्यतरोधिकतरइतियावत् ज्यचेति
ज्यादेशः अतःप्रकर्षायाधिक्यायविधिरुपायोविधेयःकर्तव्यः कुत्तोहियस्माद्रणेजयश्रीः प्रकर्षतंत्राप्रकर्षप्रधानाउत्क
र्षायत्ता तंत्रंप्रधानेसिद्धांत्तइत्यमरःबलेनएवजयोनतुदुर्बलस्येतिभावः१७

अथत्रिरित्यादिना श्लोकचतुष्टयेन विपक्षस्य ज्यायस्त्वं वर्णयति त्रिसप्तेति त्रिरावृत्तान् सप्तवारान् त्रिसप्तकृत्वः एकविंशतिवारानित्यर्थः त्रिसप्तशब्दयोः सुप्सुपेति समासः संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः जगतीपतीनां हंता नाशकः गुरुरस्त्रवेदोपदेष्टा सप्रसिद्ध इत्यर्थः अत एव यच्छब्दानपेक्षत्वं

त्रिसप्तकृत्वो जगतीपतीनां हंता गुरुर्यस्य स जामदग्न्यः
वीर्यावधूतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानां १८

तदुक्तं काव्यप्रकाशे प्रक्रांतप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षत इति जमदग्नेरपत्यं पुमान् जामदग्न्यः गर्गादिभ्यो यञिति यञ्प्रत्ययः यस्य भीष्मस्य वीर्यावधूतो विक्रमाभिभूतः अंबिकास्वयंवर- इत्यर्थः तदा भंगप्राप्तिसमये गुणानां शौर्यादीनां प्रकर्षमतिशयं आधारवशमाश्रयाधीनं विवेद जिज्ञे स्वविद्यायाः ७
स्वशिष्ये भीष्मे स्वस्मादपि प्रकर्षाधानदर्शनादिति भावः स्मेति पादपूरणे भूतेऽर्थे चेति विश्वः १८ यस्मिन्निति

यस्मिन् भीष्मे विषये अनीश्वरस्य भावो नैश्वर्यं असामर्थ्यं नञ् शुचीश्वरक्षेत्रज्ञकुशलनिपुणानामिति विकल्पात् नञ्
पूर्वपदस्य वृद्ध्यभावः तेन कृतव्यलीकः जनितवैलक्ष्यः दुःखे वैलक्ष्ये व्यलीक इति यादवः अंतकोपि पराभवं प्राप्त इ
व भीष्मस्येच्छामरणत्वादंतकोपि पराजित इवास्ते किमुतान्य इति भावः स भीष्मो रणे धनुर्धुन्वन्नास्फालयन्कस्य म

द्वि

यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवांतकोपि, धुन्वन्धनुः कस्य रणे न
कुर्यान्मनो भयैकप्रवणं स भीष्मः १९ युग्मं सृजंतमाजाविषुसंहतीर्वः सहेत को
प्रज्वलितं गुरुं कः परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्संतमिवांतवह्निं २०

नो भयैकप्रवणं भये एकप्रवणं एकोन्मुखं शिवभागवतवत्समासः न कुर्यात्सर्वस्यापि मनसि भयं कुर्यादेवेत्यर्थः १९ सृजंत
मिति आजौ रणे इषुसंहतीर्बाणसंघान् सृजंतं वर्षंतं मुंचंतं कोपप्रज्वलितं कोपेन दीप्तं अत एव परिस्फुरंत्यो लोलाश्चंचलाः शि
खाग्राण्येव जिह्वा यस्य तं तथोक्तं जगत् लोकं जिघत्संतमत्तुमिच्छंतं अदेः सन्नंतात् च्छतृप्रत्ययः लुङ्सनोर्घस्लृ इति
घस्लादेशः अंतवह्निं कालाग्निमिवस्थितं गुरुं द्रोणं वः युष्माकं मध्ये कः सहेत सोढुं कः शक्नुयान्न कोपीत्यर्थः शकिलिङ् चेति श
क्यार्थे लिङ् २०

निरीक्ष्येति संरंभेणकोपेननिरस्तंत्याजितं धैर्यंनिर्विकारचित्तत्वंयेनतंतथोक्तं आकारेणैव परधैर्यापहारिणमि
त्यर्थः आराधितजामदग्न्यं शुश्रूषितभार्गवं जामदग्न्यादधिगतास्त्ररहस्यमित्यर्थः राधेयंराधासुतंकर्णं स्त्रीभ्योढ-
क् निरीक्ष्यमृत्योरप्यसंस्तुतेषु अपरिचितेषु संस्तवःस्यात्परिचयइत्यमरः भयेषुप्रसभंपक्षपातः परिचयोजायेत

निरीक्ष्यसंरंभनिरस्तधैर्यंराधेयमाराधितजामदग्न्यं
असंस्तुतेषुप्रसभंभयेषुजायेतमृत्योरपिपक्षपातः २१

भवेत् मृत्युरपिअस्माद्बिभीयात् किमुतान्यइतिभावः संभावनायांलिङ् अत्रजननक्रियापेक्षायाः समानक
र्तृकत्वाभावात् पक्षपातक्रियापेक्षतत्संभवान्निरीक्ष्येतिल्यप्निर्देशः समर्थनीयः प्रधानोपसर्जनभावस्त्वप्रयो ८
जकइतिवार्तिककारः अत्रभयसंबंधरहितस्यमृत्योर्भयसंबंधाभिधानादसंबंधेसंबंधरूपातिशयोक्त्यलंकारः २१

अथानंतरंकरणीयमागमनप्रयोजनंचयुग्मेनाह यथेति यथाविद्ययाकरणेन सुदुश्चरामतिदुश्चरांतपस्यांतप-
श्चर्यां कर्मणोरोमंथतपोभ्यांवर्तिचरोरितिक्यप् अप्रत्ययादितिस्त्रियामप्रत्ययः आचरताकुर्वता पशुपतिंप्रतिउ
द्दिश्य तपःकुर्वतेत्यर्थः अतएवसमासादितं प्राप्तंसाधनंपाशुपताद्यस्त्ररूपंयेनतेन कपिः हनुमान्केतनंचिन्हंय

यथासमासादितसाधनेनसुदुश्चरामाचरतातपस्यां
एतेदुरापंसमवाप्यवीर्यमुन्मूलितारःकपिकेतनेन २२

स्यतेनार्जुनेन दुरापंअन्यदुलर्भंवीर्यंतेजः समवाप्यप्राप्यैतेपूर्वोक्ताभीष्मादयः उन्मूलितारः उन्मूलयिष्यंते उ
न्मूलयतेर्ण्यंतात्कर्मणिलुट् अत्रचिण्वदिडागमेतस्यासिद्धवदत्राभादित्यसिद्धत्वात् णेरनिटीतिणिलोपः वलनि
मित्तस्यैवानिटीतिनिषेधाच्च तदुक्तं चिण्वद्वृद्धिर्युक्च हंतेश्चघत्वं दीर्घश्चोक्तोयोमितांवाचिणीति इट्चासि
द्धस्तेनमेलुप्यतेणिर्नित्यश्चायंवलनिमित्तोविघातीति २२ ७ ७

महत्त्वेति हे नृप महत्त्वयोगाय प्रकर्षलाभाय महामहिम्नांमहानुभावानांदेवतांइंद्रादीनामाराध्यन्ते नयेतिआराधनींतांप्रसादयित्रीं करणाधिकरणयोश्चेतिल्युट्ङीप्च भूरिधाम्नींमहाप्रभावांतां विद्यांइंद्रमंत्ररूपां सिद्धिंसाक्षात्कार्यसिद्धिमिवेतिविद्यायाअमोघत्वोक्तिः हेप्रधानोचितदानपात्रे भूतफलभोक्तृत्वादस्यपात्रत्वोक्तिःदा

महत्त्वयोगायमहामहिम्नामाराधनींतांनृपदेवतानां दातुंप्रदानोचितभूरिधाम्नीमुपागतःसिद्धिमिवास्मिविद्यां२३ युग्मं इत्युक्तवंतंव्रजसाधयेतिप्रमाणयन्वाक्यमजातशत्रोः प्रसेदिवांसंतमुपाससाद वसन्निवांते विनयेनजिष्णुः२४

तुमुपागतोस्मि २३ इतीति इतीत्थंउक्तवंतंभाषमाणंप्रसेदिवांसंप्रसन्नं भाषायांसदवसश्रुवइतिक्वसुःतं मुनिं जिष्णुर्जयनशीलोऽर्जुनः ग्लाजिस्थश्चेतिक्स्नुप्रत्ययः व्रजसाधयानुतिष्ठेत्येवंरूपं अजातशत्रोः धर्मराजस्य स्वस्याविद्वेषशीलत्वादियंसंज्ञा वाक्यंप्रमाणयंस्तदादिष्टःसन्नित्यर्थः अंतेवसन् छात्रइव छात्रांतेवासिनौशिष्येइत्यमरः विनयेनानौद्धत्येनोपाससादसमीपंप्राप२४ ९

निर्यायेति अथवन्हिकणावदातास्फुलिंगवदुज्वला देवतासान्निध्यादितिभावः विद्यायैंद्रमंत्ररूपा दिनादिरस्यात्प्रभा तस्याल् अर्कस्य भास्करस्य बिंबादिव महर्षेर्व्यासस्य मुखान्निर्यायनिर्गत्य समासेनञ्पूर्वेक्त्वोल्यप् दीप्तिरर्कदीधि तिः स्फुरदहिकसत्सद्मभिवपार्थाननमर्जुनस्यमुखं अभिपेदे प्रविष्टा २५ योगमिति योग्यतमायार्हतमाय तस्मैपा र्थाय तं वक्ष्यमाणंमहिमानंयोगंध्यानविधिंच योगः सन्नहनोपायध्यानसंगतियुक्तिष्वित्यमरः तपः प्रभावात्सद्यो

निर्याय विद्याथ दिनादिरस्याद्बिंबादिवार्कस्यमुखान्महर्षेः पार्थाननंवन्हिकणाव दातादीप्तिस्फुरत्सद्मभिवाभिपेदे २५ योगंच तंयोग्यतमायतस्मै तपः प्रभावाद्वि ततारसद्यः येनास्यतत्त्वेषुकृते वभासेसमुन्मिमीलेवचिरायचक्षुः २६

वितताररददौ चिरकालग्राह्यमपीतिभावः तेनयोगेन तत्त्वेषु प्रकृतिमहदादिषु तथाच प्रकृतिर्महान् अहंकारः मनः पंचतन्मात्राणि पंचबुद्धींद्रियाणि पंचकर्मेंद्रियाणि पंचमहाभूतानि इतिचतुर्विंशतितत्वानि तत्रअ वभासेसाक्षात्कारेकृते सत्यार्जुनस्यचक्षुरक्षि चिरायसमुन्मिमीलेवउन्मिषितमिवेत्युत्प्रेक्षा योगोयंतस्यार्जुन स्याखिलाज्ञानभंजनक्षत्वावभासंश्चिरादंधस्यदृष्टिलाभइवाभवदितिभावः २६

आकारमिति आशंसितआख्यातोभूरिलाभोनेकश्रेयः प्राप्तिर्येनतंतथोक्तं महाभाग्यसूचकमित्यर्थः अंतःक
रणशब्देनतद्वृत्तिरुत्साहो लक्ष्यते तदनुरूपंतदनुकूलमुत्साहानुगुणव्यापारक्षममित्यर्थः आकारंमूर्तिंदधानंतम
र्जुनंमुनिर्व्यासोविजयोदये विजयफलकेतपःसमाधौ तपोनियमे समाधिर्नियमेध्यानेमौनेचैवसमर्थनइतिवि

आकारमाशंसितभूरिलाभंदधानमंतःकरणानुरूपं नियोजयिष्यन्विज
योदयेयंतपःसमाधौमुनिरित्युवाच २७ अनेनयोगेनविवृद्धतेजा निजांप
रस्मैपदवीमयच्छन् समाचराचारमुपात्तशस्त्रोजपोपवासाभिषवैर्मुनीनां २८

श्वः नियोजयिष्यन्नियोजयितुमिच्छन्नित्यर्थः लृट्शेषेचेतिलृट् लृटःसदितिसत्प्रत्ययः इतिवक्ष्यमाणमुवाच
२७ अनेनेति अनेनऋष्युपदिष्टेनयोगेनोपायेनविवृद्धतेजाः विवृद्धप्रतापः निजांपदवींपरस्मैअयच्छन् पर
स्यप्रवेशमयच्छन्नित्यर्थः उपात्तशस्त्रोगृहीतायुधएवसन् हेअर्जुन जपोपवा साभिषवैः स्वाध्यायाशनस्नानैः- १०
मुनीनामाचारमनुष्ठानंसमाचरअनुतिष्ठ २८ ७ ७ ७

क्षेत्रविशेषेतपःसिद्धिरित्याशयेनतन्निदर्शयन्नाह करिष्यसइति यत्रशिलोच्चयेपर्वतेगोत्रभिदः इंद्रस्यप्रसत्तयेप्र सादायसुदुश्चराणितपांसिकरिष्यसे चारुशिलोच्चयंरम्यशिखरंतंशिलोच्चयंगिरिंइंद्रकीलं अद्रिगोत्रगिरिग्रावा- चलशैलशिलोच्चयाइत्यमरः त्वांएषःगुह्यकः यक्षः अनंतरमेवास्यपुरःप्रादुर्भावादेषइतिनिर्देशः क्षणादप्रयासेन

करिष्यसेयत्रसुदुश्चराणिप्रसत्तयेगोत्रभिदस्तपांसि शिलोच्चयंचारुशिलोच्च यंतमेषक्षणान्नेष्यतिगुह्यकस्त्वां २९ इतिब्रुवाणेनमहेंद्रसूनुं महर्षिणातेन तिरोबभूवे तंराजराजानुचरोस्यसद्यःप्रदेशमादेशइवाधितिष्ठौ ३०

नेष्यति प्रापयिष्यति २९ इतीति इतीत्थंमहेंद्रसूनुंअर्जुनंब्रुवाणेनउक्तवतेत्यर्थः तेनऋषिणा व्यासेनतिरोबभू वेअंतर्दधेअंतर्धानंप्रापेभावेलिट् राजराजः यक्षराजः राजराजोधनाधिपइत्यमरः राजाप्रभौनृपेचंद्रेयक्षेक्षत्रि- यशक्रयोरितिविश्वः तस्यानुचरः पूर्वोक्तोयक्षः अस्यमुनेरादेशः साक्षात्स्थानमिव सद्यस्तंअर्जुनंअधितिष्ठौ प्राप्तइत्यर्थः स्थादिष्वभ्यासेनचाभ्यासस्येतिषत्वं ३०

कृतेति सपुण्यजनोयक्षः कृतानतिः कृतप्रणामः सन् व्याहृतसांत्ववादे उक्तप्रियवचने व्याहारउक्तिर्लपितमित्यमरः
जिष्णावर्जुनेजातस्पृहोजातानुरागः सन् सख्यौसुहृदीव अथमित्रंसखासुहृदित्यमरः संप्रसादं विस्रंभं विश्वासमिया
यप्राप तथाहि सतांसाधूनांयोगः संगतिराशुविश्वासयतिहि सामान्येन विशेषसमर्थनरूपोर्थांतरन्यासः ३१ अथेति
अथोष्णभासासूर्येणोद्याय पुनरुद्गमाय विहीयमानान्त्यज्यमानानिति तमः प्राप्तिकारणोक्तिः बृहद्द्युतीन्सौवर्णान्हिप्यमा

कृतानतिर्व्याहृतसांत्ववादे जातस्पृहः पुण्यजनः सजिष्णौ इयाय सख्याविव संप्रसादं विश्वासयत्याशु सतां हि योगः ३१ अथोष्णभासेव सुमेरुकुंजान् विहीयमानानुदयाय तेन बृहद्द्युतीन्दुःखमिवाप्तलाभं तमः शनैः पांडुसुतान्प्रपेदे ३२

नानित्यर्थः इतितमः संकोचकारणोक्तिः सुमेरुकुंजानिव अत्रसुमेरुग्रहणं कुंजानांसौवर्णद्योतनार्थं तेनार्जुनेनोदयाय
श्रेयसेविहीयमानान्बृहद्द्युतीननेकबुद्धिप्रकाशान्पूर्ववद्विशेषणद्वयस्यप्रयोजनमर्जुने अनुसंधेयं पांडुसुतान् चतुरइति-
शेषः युधिष्ठिरादीन् दुःखेनकृच्छ्रेणकृतउत्पादितआत्मलाभउत्पत्तिर्यस्य तत्तथोक्तं तेषांविवेकित्वात्कथंचिल्लब्धोदयमि त्यर्थः ११
तमः शोकांधकारश्च तमोंधकारेस्वर्भानौतमः शोकेगुणांतरइत्युभयत्रापिविश्वः शनैः मंदं प्रपेदे तेषांविवेकित्वाद्भीतभीतमि
वेतिभावः अत्रतमःशब्दस्यश्लिष्टत्वात्श्लेषानुप्राणितेयमुपमा ३२

असंशयेति असंशयमसंदिग्धं यथातथा आलोचितं विवेचितं यत्कार्यं तेन कार्येण नुन्नो निरस्तः इति लघुत्वहेतूक्तिः शुद्वविदोंदत्वाग्राहीभ्यौऽन्यतरस्यां इति निष्ठानत्वं कार्यगौरवं आलोच्य निरस्त इत्यर्थः तथापि प्रेम्णा भ्रातृवात्सल्येन कर्त्रा समानीय पुनराकृष्य विभज्यमानः समशोकभागीक्रियमाणः तुल्यप्रेम्णा तुल्यदुःखत्वं भवतीति भावः स पूर्वोक्तोऽदुःख

असंशयालोचितकार्यनुन्नः प्रेम्णा समानीय विभज्यमानः
तुल्याद्विभागादिव तन्मनोभिर्दुःखातिभारोपि लघुः स मेने ३३

मेवातिभारः दुःखातिभारो अतिभारभूतमपि दुःखमित्यर्थः तन्मनोभिस्तेषां च तुर्णां पार्थानां मनोभिस्तुल्याद्विभागादिव पूर्वोक्तात्प्रेमकृतात् समविभागादिवेत्यर्थः वस्तुतस्तु विवेकादिति भावः पुनर्विभागग्रहणं तस्य हेतुत्वोत्प्रेक्षार्थं अनुवाद इत्यदोषः लघुर्मेने मतः यथैकोऽनेकधा विभज्य बहुभिरुह्यमानो महानपि भारो लघुर्मन्यते तद्वदित्यर्थः ३३

अथैवं प्रेम्णा आकृष्यमाणमपि शोकं विवेको निर्जिगायेत्याह धैर्येणेति धैर्येण तेषां निसर्गतो निर्विकारचित्तत्वेन तथा महर्षेर्व्यासस्य प्रवर्तकस्येति शेषः विश्वास्यतया श्रद्धेयवचनत्वेनेत्यर्थः अरातिप्रभवाद् रातिहेतुकात् नी-

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ३४

व्राद् सह्यान्मन्योः क्रोधाद्धेतोः तथा अर्जुनप्रभावपरिज्ञानाच्चेति हेत्वंतरं विशेषणमुखेनाह मघोनः सुते अर्जुने वी-
र्यं च नलोकेत्यादिना षष्ठीप्रतिषेधः विद्वत्सु ज्ञातवत्स्विति यावत् विदेः शतुर्वसुरिति विकल्पेन वस्वादेशः तेषु पार्थे- १२
षु स शोकः स्थानं स्थितिं नावापन प्राप ३४ छ छ छ

तानिति तान्यार्थान्त्यक्तवत् शर्मसुखं शर्मशांतिसुखानिचेत्यमरः नह्विरूढंअशर्मंदुःखं नञितिनञ्समासः भूरिधा म्नस्तेजस्विनः इतिहानिहेतूक्तिः चतुरस्तान्यार्थान्वासरस्यभूरिधाम्नः चतुरोपियामान्प्रहरानिवदूरंविहायत्यक्त्वा एकौघभूतमेकराशिभूतंसत् श्रेण्यादयःकृतादिभिरिच्व्यर्थेकर्मधारयः श्रेण्यादिराकृतिगणइतिशाकटायनः कृष्णां विभावरींकृष्णपक्षरात्रिंध्वांतमिवकृष्णांद्रौपदींप्रपेदे ३५ तुषारेति साद्रौपदीविलोकनेअर्जुनावलोकनेअगूढभावाः

तान्भूरिधाम्नश्चतुरोपिदूरंविहाययामानिववासरस्य एकौघभूतंतदशर्मकृ
ष्णांविभावरींध्वांतमिवोपिपेदे ३५ तुषारलेखाकुलितोत्पलाभेपर्यश्रुणी
मंगलभंगभीरुःअगूढभावापिविलोकनेसानलोचनेमीलयितुंविषेहे ३६

गूढाभिप्रायाऽस्फुटाभिलाषपीत्तियावत् भावोलीलाक्रियाचेष्टाभूत्यभिप्रायजंखिषीतिवैजयंती मंगलभंगभीरुः मंगलहानेर्भीतासतीपर्यश्रुणीपरिगताश्रुकेबाष्पावृत्तेइत्यर्थः अतएवतुषारलेखाकुलितोत्पलाभेहिमबिंदुसहितें- दीवरसन्निभेइत्युपमालंकारः लोचनेमीलयितुंनविषेहेनशशाक अश्रुणोर्दृष्ट्यावरणकलेपितन्निपातस्यामंगल त्वात्तन्निवर्तकंनिमीलनंसानचकारेत्यर्थः ३६ ७ ७ ७

अकृत्रिमेति इंद्रसूनुः अर्जुनः क्रियया निर्वृत्तः कृत्रिमः ड्वितः क्त्रिरिति क्त्रिः क्तेर्मम्नित्यमिति मप्रत्ययस्तद्भिन्नः प्रेमैव रसः अकृत्रिमप्रेमर-
सेन अभिरामं अन्यत्र मधुरादिना चाभिरामं रामया रमण्यार्पितं दत्तं दृष्टिं विलोभयतीति दृष्टिविलोभि दृष्टिप्रियं
हृष्टं दर्शनं नपुंसके भावे क्तः मनःप्रसादः प्रसन्नमन इत्यर्थः सोंजलिरिवेत्युपमितसमासः तेन मनःप्रसादांजलिनापा-
थिसाधु पाथेयं शंबलमिव पथ्यतिथिवसतिस्वपतेर्ढञ् निकामम तिशयेन जग्राह रामार्पितं पाथेयं पथि क्षेमाय

अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टं मनःप्रसादांजलिना
निकामं जग्राह पाथेयमिवेंद्रसूनुः ३७ धैर्यावसादेन हृतप्रसादा वन्यद्विपेने
व निदाघसिंधुः निरुद्धबाष्पोदयसन्नकंठं जगाद कृच्छ्रादिति राजपुत्री ३८

वतीत्यागमः ३७ धैर्येति वन्यद्विपेन वन्यग्रहणं उच्छृंखलत्वद्योतनार्थं गजेन निदाघसिंधुः ग्रीष्मनदीव निदाघग्रहणं दौर्ब
ल्यद्योतनार्थं धैर्यावसादेन धैर्यभ्रंशेन कृत्वा हृतप्रसादा हृतनैर्मल्या क्षोभं गमितेत्यर्थः राजपुत्री क्षत्रियसुता द्रौपदी
अतः क्षात्रयुक्तमेव वक्ष्यतीति भावः निरुद्धबाष्पोदयं संरुद्धरोदनं सन्नकंठं हीनस्वरं तयोः कृतबहुव्रीह्योः क्रियाविशे
षणयोर्विशेषणसमासः कृच्छ्रात्कथंचिदिति वक्ष्यमाणं जगाद उवाच ३८ ७ ७ १३

मग्नामिति पंकभूते पंकोपमिते भूतं क्ष्मादौ पिशाचादौ न्याये सत्योपमानयोरिति विश्वः द्विषच्छद्मनि शत्रुकपटे मग्नां दु
रुद्धरामित्यर्थः संभावनायां योग्यतां गौरवमिति यावत् भूतिं संपदमिव भूतिर्भस्मनि संपदीत्यमरः उद्धरिष्यन् उद्धा
रकस्त्वमिति शेषः आधिद्विषां दुःखच्छिदा तपसा आप्रसिद्धेः सम्यक्सिद्धिपर्यंतमस्माद्धिनास्माभिर्विनेत्यर्थः पृथ

मग्नां द्विषच्छद्मनि पंकभूते संभावनां भूतिमिवोद्धरिष्यन्
आधिद्विषामा तपसां प्रसिद्धेरस्मद्विना मा भृश मुन्मनीभूः ३९

ग्विनेत्यादिना विकल्पेन पंचमी भृशं मा उन्मनीभूः अस्माद्विरहाद्दुर्मना मा भूरित्यर्थः दौर्मनस्यं तपः परिपंथित्वादि-
ति भावः माङ्ग् इत्याशीरर्थे लुङ् नमाङ्योगे इत्यडागमप्रतिषेधः अनुन्मनाः उन्मनाः संपद्यमानः उन्मनीभूः अभूततद्भा
वे च्विः अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चेति सकारलोपः अस्य च्वावितीकारः ३९ ७

अथानौत्सुक्यदार्ढ्यार्थं तपसां सर्वार्थसिद्धिनिदानत्वमाह यश इति यशोधिगंतुं कीर्तिं लब्धुं सुखस्य लिप्सया लब्धुमिच्छया वा मनुष्यसंख्यां मनुष्येषु गणनां अतिवर्तितुं अतिक्रमितुं वा मानुषं कर्म कर्तुमित्यर्थः अभियोगभाजामभिनिवेशवतां निरुत्सुकानामदुर्मनायमानानामिति यावत् सिद्धिः पूर्वोक्तं यशः सुखाद्यर्थसिद्धिश्च समुत्सुकेव अनुरक्तकांतेवांकमुत्संगमुपैति तत्तस्मात् दुस्सहहृदयदुःखमातपः सिद्धेः सोढव्यमिति भावः ४० अथास्य मन्यूद्दीपनद्वारा तपः प्रवृत्तिं रोचयितुमरिकृतं निकारं तावच्चतुर्भि

यशोधिगंतुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा निरुत्सुकानामभियो-
गभाजां समुत्सुकेवांकमुपैति सिद्धिः ४० लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य-
मुष्णान्वसु जैत्रमोजः तेजस्वितायाविजयैकवृत्तेर्निघ्नंप्रियंप्राणमिवाभिमानं ४१

रुद्धाटयति लोकमिति विधात्रा ब्रह्मणा लोकं गोप्तुं विहितस्य सृष्टस्य क्षत्रस्य क्षत्रियजातेः संबंधि जयनशीलं जेतृ तदेव जैत्रं जेतृशब्दात्तृजंतात्प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्ययः ओजो बलं दीप्तिर्वा ओजो बलेऽम्बुदीप्तौ चेति विश्वः तदेव वसु धनमिति रूपकालंकारः मुष्णन् अपहरन् अरिधिक्कृतनिकारस्य कुतः क्षात्रं तेज इति भावः किंच विजयैकवृत्तेः विजयैकजीविकायाः क्षत्रियस्य विजेतव्यमिति भावः वृत्तिर्वर्तनजीवन इत्यमरः तेजस्वितायाः तेजस्विनामित्यर्थः तेजसः आधान्यद्योतनार्थं भावप्रधानो निर्देशः प्रियं प्राणमिव प्राणसममित्यर्थः अभिमानमहंकारं निघ्नन् खंडयन्तेजस्विनां प्राणहानि प्रायामानहानिरिति भावः ४१ १४

अधिक्षेपाद्यसहनंतेजः प्राणात्ययेष्वपि नत्याज्यंइत्याह व्रीडेति पुनश्च आप्तजनेनोपनीतः श्रावितइत्यर्थः तथापिसंश-
य्यसंदिह्य असंभावितबुद्ध्येतिभावः व्रीडानतैर्जुगुप्सितवृत्तांतश्रवणादितिभावः नृपैःदेशांतरस्थैः कृच्छ्रेणप्रपन्नः प्राप्तः
आप्तोक्तत्वात्कथंचिद्विश्वस्तइत्यर्थः यः शृण्वतामपिदुःसहः किमुतानुभवतामितिभावः इत्येषांपूर्वेषांव्याख्यामयाचा
न्यथाव्याख्यायते आप्तजनोपनीतोजातिकृतः संशय्यकथमिदमन्याय्यमुपेक्ष्यमितिविचार्य व्रीडानतैर्जुगुप्सितक

व्रीडानतैराप्तजनोपनीतः संशय्यकृच्छ्रेणनृपैः प्रपन्नः
वितानभूतंविततंपृथिव्यांयशःसमूहन्निवदिग्विकीर्णं ४२

र्मदर्शनादितिभावः नृपैः तत्रस्थैः कृच्छ्रेणप्रपन्नोंऽगीकृतः गोत्रकलहेमध्यस्थैरुदासितव्यमितिबुद्ध्योपेक्षितइत्यर्थः
पक्षद्वयेपिप्रपन्नइत्यत्राप्तजनोपनीतत्वपदार्थभूतस्यविशेषणस्यागहेतुत्वोक्त्याकाव्यलिंगमलंकारः पृथिव्यांवितान
भूतंउल्लोचोपमितं अस्त्रीवितानमुल्लोचइत्यमरः दिग्विकीर्णं वितानमपिदिगंतलग्नमिति भावः विततंप्रथितंयशः स
मूहन्निवसंकोचयन्निवेत्युत्प्रेक्षा अरातिपरिभूतस्यकुतः कीर्तिरितिभावः ४२ ७ ७

वीर्यैरिति पुनश्च वीर्याण्येव अवदानानि तेषु कृतावमर्शः अवदानं कर्म वृत्तमित्यमरः कृतास्कंदनः पुराकृत पराक्रमो द्भूता न्यपि प्रमृजन्नित्यर्थः अत एव संप्रतीतिं प्रख्यातिं प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता इत्यमरः अभूतामविद्यमा



वीर्यावदानेषु कृतावमर्शस्तन्वन्नभूतामिव संप्रतीतिं
कुर्वन्प्रयामक्षयमायतीनामर्कत्विषामन्ह इवावशेषः ४३

नामिवेत्युत्प्रेक्षा सतोऽप्यसत्वमुत्प्रेक्षते तन्वन्कुर्वन् पुनश्चान्हो वशेषो दिनांतोऽर्कत्विषामिवायतीनामुत्तरकालानां प्र यामक्षयं दैर्घ्यनाशं कुर्वन्निति श्रौती पूर्णोपमा अरिनिराकृतस्य कुतश्चिरावस्थानमिति भावः ४३ ७

प्रसह्येति पुनः परैः शत्रुभिरस्मासु प्रसह्य बलात्प्रयुक्त आचरितो यो निकारः परिभवः केशाकर्षणरूपः स्मर्तुं न शक्यो ऽधिकर्तुमनुभवितुं किमुत यस्य स्मरणमपि दुःसहमनुभवस्तु दुःसह इति किमु वक्तव्यमित्यर्थः स निकारस्त्वद्विना त्वया विना पृथग्विनेत्यादिना पंचमी आर्द्रः सन्कुतश्चित् अभिभूतासुराणप्रहार इव त्वद्विरहदुःखासुनः नवीकरिष्यति

प्रसह्य योऽस्मासु परैः प्रयुक्तो स्मर्तुं न शक्यः किमुताधिकर्तुं
नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद्विना मे हृदयं निकारः ४४

नवीभविष्यतीत्यर्थः उपशुष्यत् नत्वद्यापि शुष्कमिति भावः दुःखस्तंभनं शोषपदार्थः मे हृदयं नवीकरिष्यत्यार्द्रीकरिष्यति व्रणमिवेति भावः दुःखितस्य पुनः दुःखोपचयः प्रशांतप्रायमपि दुःखहेतुं पुनरुद्भावयतीत्यर्थः अत्र शोषादिविशेषणसाम्याद्व्रणाद्यप्रस्तुतार्थप्रतीतेः समासोक्तिरलंकारः ४४ ७ ७

पुनः प्रकारांतरेणमन्युंदीपयति म्लानइत्यादिभिः त्रिभिः श्लोकैः तत्रवक्ष्यमाणप्रत्यभिज्ञानहेतुभिः धनंजयंविशि नष्टि म्लानइति अभिमानस्यव्यसनात् भ्रंशात् व्यसनंविपदिभ्रंशोदोषेकामजकोपजइत्यमरः दंतव्यसनाद्दंतभं गाद्दंतीव असत्वंविकारंवैरूप्यंप्राप्तः अतोनप्रत्यभिज्ञायतइतिभावः एवमुत्तरत्रापिअनुसंधेयं पुनश्चद्विषत्स- तापेन शत्रुतेजसा अंतरितंतिरस्कृतंउरुतेजः प्रतापोयस्यसतथोक्तः अतएवशरद्घनाकीर्णः शरन्मेघच्छन्नोऽन्हः

म्लानोभिमानव्यसनादसत्वंदंतीवदंतव्यसनाद्विकारं द्विषत्प्रतापांतरितोरु तेजाःशरद्घनाकीर्णइवादिरन्हः ४५ सव्रीडमंदैरिवनिष्क्रियत्वान्नात्यर्थम स्त्रैरवभासमानः यशःक्षयात्क्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ४६

आदिः प्रत्यूषइवस्थितः तद्वदेवायंप्रत्यभिज्ञायमानइत्यर्थः ४५ पुनश्चनिष्क्रियत्वादर्थक्रियाशून्यत्वात्सव्रीडमंदै रिव सव्रीडैरतएवमंदैरपटुभिरिवस्थितैरित्युत्प्रेक्षा मूढाल्पापटुनिर्भाग्यामंदाःस्युरित्यमरः अस्त्रैरत्यर्थंनावभासमा नोनप्रकाशमानः पूर्ववत्तुनैवमितिभावः किंतुयशःक्षयाद्धेतोः क्षीणजलोयोऽर्णवस्तदाभस्तत्सदृशस्त्वमन्यमाकार मभिपन्नः म्लानइवस्थितइत्युत्प्रेक्षा तस्याश्चक्षीणजलार्णवाभइत्युपमासंसृष्टिः ४६ ७७ १६

दुःशासनेति पुनश्चदुःशासनस्य कर्त्तुरमर्षआकर्षणंसएवरजोधूलिःमालिन्यहेतुत्वादितिभावः तेन विकीर्णैर्वि-
निक्षिप्तैरतएवविनाथैरिवतत्रस्थितवत्तांयुष्माकमसत्प्रायत्वादनाथैरिवस्थितैरित्युत्प्रेक्षा अन्यथाकथमियंदुर्दशे
तिभावः किंतुभाग्यनाथैर्दैवमात्रशरणैरन्यथास्वरूपमपिलुप्येतेतिभावः एभिःपरिदृश्यमानैरसंयमितैरिति-

दुःशासनामर्षरजोविकीर्णैरेभिर्विनाथैरिवभाग्यनाथैः
केशैःकदर्थीकृतवीर्यसारःकच्चित्सएवासिधनंजयस्त्वं ४७

भावः केशैःशिरोरुहैः कचःकेशःशिरोरुहइत्यमरः कुत्सितार्थोवस्तुकदर्थः अर्थोभिधेयरैवस्तुप्रयोजननिवृत्ति
ष्वित्यमरः कोःकत्तत्पुरुषेचीतिकुशब्दस्यकदादेशः कदर्थीकृतोवीर्यसारोशौर्यबलेयस्यसतथोक्तः इत्थंपूर्वविल
क्षणःत्वंसएवधनंजयोसिकच्चित् कच्चित्कामप्रवेदनइत्यमरः सएवचेन्नैवमस्मानुपेक्षसइतिभावः ४७

 

अथाप्युपेक्षणेदोषमाह सइति क्षतात्त्रायतइतिक्षत्रं क्षत्रियकुलं सुपीतियोगविभागात्कप्रत्ययः पृषोदरादित्वा त्पूर्वपदस्याकारलोपः अथवाक्षदितिक्विबंतोपपदात्कप्रत्ययः क्षत्रेजातःक्षत्रियः क्षत्राद्घइतिघप्रत्ययः कर्मणे प्रभवतितत्कार्मुकं कर्मणउकञ्इत्युकञ्प्रत्ययः एवंस्थितेवाक्यार्थः कथ्यते यःसतांसाधूनांसहत्तइतिसहः पचा द्यच् त्राणस्यसहस्त्राणसहः रक्षणक्षमः सएवक्षत्रियः क्षत्रियशब्दवाच्यः तथायस्यकार्मुकस्यकर्मसुरणक्रिया

सक्षत्रियस्त्राणसहःसतांयस्तत्कार्मुकंकर्मसुयस्यशक्तिः
वहन्द्वयीमप्यफलेऽर्थजातेकरोत्यसंस्कारहतामिवोक्तिं ४८

सुशक्तिरस्तीतिशेषः तदेवकार्मुकंकार्मुकशब्दवाच्यं अत्रैवैतौशब्दौमुख्यौनान्यत्रइत्यर्थः एवंस्थितेद्वयींद्विविधा मुक्तिं द्वाविमौक्षत्रियकार्मुकशब्दावित्यर्थः अफलेपूर्वोक्तार्थशून्येऽर्थजाते स्वाभिधेयसामान्यजातिमात्रइत्यर्थः जातंजात्यादिजन्मसुइतिविश्वः जातिर्जातंचसामान्यमित्यमरः वहन्वर्तयन् असंस्कारहतामव्युत्पत्तिदूषितामि वकरोतीत्युत्प्रेक्षा तस्मात्त्वमपिअस्मद्रक्षणेनोक्तदोषादात्मानंमोचयस्वेत्यर्थः ४८ 

अथत्वद्गुणा अपि नोज्जीवेयुरित्याह वीतेति हे पार्थ वीतौजसो निःप्रभाः सन्निधिमात्रशेषाः सत्तामात्रावशिष्टाः भव
त्कृतां भवता करिष्यमाणां आशंसायां भूतवच्चेति भूतवत्प्रत्ययः भूतिं अभ्युदयं अपेक्षमाणास्त्वदीयाः गुणाः समान
दुःखाः समदुःखभाज इव नोऽस्माकं स्वरूपतां वीतौजस्त्वादिसाधर्म्यं भजंत इत्युपमा समानदुःखा इवेत्युत्प्रेक्षया

वीतौजसः सन्निधिमात्रशेषा भवत्कृतां भूतिमपेक्षमाणा समानदुःखा इव नस्त्व
दीयाः स्वरूपतां पार्थ गुणा भजंते ४९ आक्षिप्यमाणं रिपुभिः प्रमादान्नागैरि
वालूनसटं मृगेंद्रं त्वां धूरियं योग्यतयाधिरूढा दीप्त्या दिनश्रीरिव तिग्मरश्मिं ५०

वीतौजस्त्वादिसंभाविकयानुप्राणितेत्यनुसंधेयं ४९ तथापि ममैव कोयं भार इत्यत्राह आक्षिप्यमाणमिति प्रमादात्
प्रज्ञाहान्यान्नतु दौर्बल्यादिति भावः रिपुभिराक्षिप्यमाणमत एव प्रमादान्नागैः गजैः ग्रहे ग्राहि गजा नागा इति वैजयं
ती आलूनसटं आक्षिप्तकेसरं सटा जटाकेसरयोरित्यमरः मृगेंद्रमिव स्थितं त्वामियं धूः कार्यभारः तिग्मरश्मिं सूर्य-
दीप्त्या दिनश्रीरिव योग्यतया निर्वाहकतया अधिरूढा आरूढवती कर्तरि क्तः त्वदधीनेति भावः ५० छ

 

पूर्वं निर्व्यवसायस्य सक्षत्रिय इत्यादिना दोष उक्तः संप्रति व्यवसायिनो गुणमाह करोतीति यः पुमान् शेषजनातिरिक्तां अधिकां सर्वातिशायिनीमित्यर्थः संभावनां योग्यतां क्रियाभिश्च रितैरर्थवत्तीं सफलां करोति तं पुमांसं संसत्सु सभासु सभासमितिसंसद इत्यमरः पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति पूर्यते नयेति पूरणी द्वित्वादि संख्या न समुपैति न गच्छति अद्वितीयो भवतीत्यर्थः तस्मादसाधारणार्थलाभाय त्वया महानुत्साह आस्थेय इति

करोति यः शेषजनातिरिक्तां संभावनामर्थवतीं क्रियाभिः संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या ५१ प्रियेषु यैः पार्थ विनोपपत्तेर्विचिंत्यमानैः क्षममेति चेतः तव प्रयातस्य जयाय ते षां क्रियाद घानां मघवा विघातं ५२

भावः ५१ अथ द्वाभ्यामर्जुनस्य सुलभविपक्षस्य विजयाय प्रोषितस्य कर्त्तव्यमुपदिशति प्रियेष्विति हे पार्थ प्रियेषु अस्मासु विषये उपपत्तेः कारणाद्विना विचिंत्यमानैरकस्मादेवाशंक्यमानैर्यैरघैश्चेतः क्षमं खेदमेति जयाय प्रयातस्य तव संबंधिनां तेषामघानां व्यसनानां दुःखेनो व्यसनेष्वघमितिवैजयंती मघवा इंद्रः योऽस्माभिरुपास्यत इति भावः विघातं निवारणं क्रियात्करोतु आशिषि लिङ् लोटावित्याशीरर्थे लिङ् तस्मादस्मच्चिंतया न चेतः खेदयितव्यं जयार्थिना त्वया अन्यथा तदसंभवादिति भावः ५२ 

मागाइति असंबाधोऽसंकटोविजनइत्यर्थः संकटंनातुसंबाधइत्यमरः शिवोनिर्बाधः निर्भयः द्वयोरन्यतरस्याविशे
ष्यत्वविवक्षयाविशेषणसमासः अस्मिन् असंबाधशिवेपिदेशे चिरायचिरं एकश्चासौचरश्चेत्येकचरः एकाकी
वसन् प्रमादं मज्ञादौर्बल्यंमागाः इणोगाङ्लुङीतिगादेशः नचनिःस्पृहस्यममाकिंचित्करःप्रमादइतिवाच्यमित्या

मागाश्चिरायैकचरःप्रमादंवसन्नसंबाधशिवेपिदेशे -
मात्सर्यरागोपहतात्मनांहिस्खलंतिसाधुष्वपिमानसानि ५३

ह मात्सर्येति मत्सरएवमात्सर्यं द्वेषः रागः स्नेहस्ताभ्यामुपहतात्मनांरागद्वेषदूषितस्वभावानांमानसानिमनां
सि साधुष्वपिसज्जनेष्वपिस्खलंति विकुर्वते अत्रप्रमादनिषेधलब्धाप्रमादनिषेधलब्धाप्रमादरूपकारणेनार्थत्रा
भिरूपकारणस्यव्यतिरेककारणसमर्थनाद्वैधर्म्येणकार्यकारणसमर्थनरूपोर्थांतरन्यासोऽलंकारः ५३ ७

तत्तस्मात्कारणादाशु शीघ्रं मह्यं मे वचनं कुर्वन्नपश्यन्नित्यर्थः नोऽस्माकं मनोरथान्सफलीकुरुष्व अभिनिर्यातनेनास्मान्प्र
तिष्ठापयेत्यर्थः प्रार्थनायांलोट् किंच कृतार्थं कृतकृत्यं प्रत्यागतमेव त्वां त्वामौ द्वितीयायाश्चेतित्वादेशः स्तनयोरुपपी
डेतिस्तनोपपीडं सप्तम्यांचोपपीडरुधकर्षइतिणमुल् परिरब्धुंकामोयस्याःसापरिरब्धुकामास्मि आलिंगितुमिच्छा-
मीत्यर्थः तुंकाममनसोरपीति मकारलोपः प्राक्कार्यसिद्धेः प्रमदालिंगनमपिनप्रीतिदमिति भावः ५४ उदीरितामि

तदाशु कुर्वन्वचनं महर्षेर्मनोरथान्नः सफलीकुरुष्व प्रत्यागतं त्वास्मि कृता
र्थमेव स्तनोपपीडं परिरब्धुकामा ५४ उदीरितां तामिव याज्ञसेन्या नवीकृ-
तोद्ग्राहित विप्रकारां आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः
५५

ति सोऽर्जुनः इतिइत्थं यज्ञसेनस्यापत्येन स्त्रिया याज्ञसेन्या द्रौपद्या उदीरितामुक्तां नवीकृतः पुनरुद्भादनेन प्र
त्यायितः अतएवोद्ग्राहितोमनसिनिधापितश्चविप्रकारः परिभवोययातां वाचमासाद्य आकर्ण्येत्यर्थः उदीचीं
उत्तरांकाष्ठांदिशं दिशास्तुककुभः काष्ठाआशाश्चहरितश्चताइत्यमरः तिग्मरश्मिरिव भृशंदिदीपेजज्वालचुक्रोधे
त्यर्थः ५५ १९

अथेति अथविद्विषः शत्रून्पुरः पश्यन् इवस्थितः तथापुरोधसा धौम्येन आरोपितासंमंत्रसाहिता हेतिसंहति-
रायुधकलापोयस्यसतथोक्तः हेतिर्ज्वालांकुरायुधइतिवैजयंती सोऽर्जुनोरम्यः सौम्यः सन्नपि अभिचारः पर

अथाभिपश्यन्निवविद्विषः पुरः पुरोधसारोपितहेतिसंततिः
बभाररम्योपिवपुः सभीषणंगतः क्रियांमंत्रइवाभिचारिकीं ५६

हिंसाप्रयोजनमस्याः साऽभिचारिकी तदस्यप्रयोजनमितिठक् तांक्रियांगतअभिचारकर्मणिनियुक्तइत्यर्थः
मंत्रइवरम्यः प्रकृत्यारमणीयः सन्नपिभीष्यतइतिभीषणं नंद्यादित्वात्ल्युप्रत्ययः वपुः बभार प्रशांतोमंत्रः
प्रयोगभेदादिवसोप्यवस्थाभेदाद्भीषणोबभूवेत्यर्थः ५६

उक्तमायुधारोपणं विवृण्वन्प्रस्थानमाह त्रिभिरविलंघ्येत्यादिभिः परैः शत्रुभिः अविलंघ्यमनतिक्रमणीयंविकर्षणंयस्यतत् अमोघाकर्षणमित्यर्थः प्रथितोज्यारवोगुणध्वनिः कर्मचबाणमोक्षादिकंयस्यतत्कार्मुकंचोद्वहन्नित्यन्वयः तथाअरीणांदृष्टिगोचरं दृष्टिपथमगतोअप्राप्तो आहवेष्वनिवर्तित्वादस्येतिभावः निर्गतास्त्रिं

अविलंघ्यविकर्षणंपरैः प्रथितज्यारवकर्मकार्मुकं
अगतारिवदृष्टिगोचरं सितनिस्त्रिंशयुजोमहेषुधी ५७

शतोंगुलिभ्योनिस्त्रिंशः खड्गः डप्रत्यये संख्यायास्तत्पुरुषेस्योपसंख्यानात्समासांतः तेनशितेनतीक्ष्णेनयुक्तइ
तिशितनिस्त्रिंशयुजो सत्सूद्विषेत्यादिनाक्विप् महेषुधीमहानिषंगौ इषवोधीयंतेनयोरितिविग्रहः कर्मण्यधिकर २०
णेचेतिकिप्रत्ययः तूणीपासंगतूणीरनिषंगाइषुधिर्द्वयोः तूण्यांखड्गेतुनिस्त्रिंशचंद्रहासासिरिष्टयइत्यमरः ५७

यशसेति किंच गोत्रभिदायुधक्षतीः इंद्रवज्रप्रहारवंध्राणि खांडवदाहनसंभवादितिभावः महसास्वकांत्या
यशसेवमूर्त्तयाकीर्त्येवमुहुस्तिरोदधत् आच्छादयत् सरलंरलसहितं अतएवज्वलितज्योतिः दीप्तितारकं ज्योति
स्तारामिभाज्वालादृक्पुत्रार्थधरात्मस्वितिवैजयंती दिवोंतरंअंतरिक्षंनभोमध्यमिवस्थितं अंतरंपरिधानीयेवा

यशसेवतिरोदधन्मुहुर्महसागोत्रभिदायुधक्षतीः कवचंचसरलमुद्व
हनुज्वलितज्योतिरिवांतरंदिवः ५८ अलकाधिपभृत्यदर्शितंशिव
मुर्वीधरवर्त्मसंप्रयान् हृदयानिसमाविवेशसक्षणमुद्राष्पदृशांतपोभृतां ५९

द्वोस्त्रीयेंतरात्मनि क्लीबेमध्येवकाशेचेतिवैजयंती कवचंचोद्वहन् ५८ अलकेति सोऽर्जुनोलकाधिपभृत्येनयक्षे
णदर्शितं अतःशिवंनिर्बाधं उर्वीधरवर्त्महिमवन्मार्गप्रतिसंप्रयान् संगच्छमानः क्षणमुद्राष्पदृशां वियोगदुःखात्
साश्रुनेत्राणांतपोभृतांद्वैतवनवासिनांतपस्विनांहृदयानिसमाविवेश खेदयामासेत्यर्थः ५९ ७

अनुजगुरथेति विशेषकं अथ आशादिशो दिवि भवं दिव्यं दिगादिभ्योयत्प्रत्ययः दुंदुभिध्वानं देववाद्यध्वनिमनुज गुः अनुदध्वनुः गायतेर्लिट् व्योम्निसुरकुसुमनिपाते लक्ष्मीर्वितेने विस्तारिता पुष्पवृष्टिश्चाजनिष्टेत्यर्थः किंचा निभृताश्चंचलाः वेलायांकूले यावीचयोलहर्यः ताएव बाहवो यस्यसतथोक्तः वेलाकूलविकारयोरितिशाश्वतः प

अनुजगुरथदिव्यंदुंदुभिध्वानमाशाः सुरकुसुमनिपाते व्योम्निलक्ष्मीर्वितेने
प्रियमिवकथयिष्यन्नालिलिंगस्फुरंतीं भुवमनिभृतवेलावीचिबाहुः पयो
धिः ६० इतिश्रीभारविकृतौ किरातार्जुनीये काव्ये तृतीयः सर्गः समाप्तः

योधिः स्फुरंतीमुल्लासंतींहर्षात् प्रस्पंदमानांच भुवंप्रियं इष्टंभारावतारऱूपंकथयिष्यन्निवकथयितुमिवेत्यर्थः लृ- टः शेषेचेति चकारात्क्रियार्थक्रियायांलृट् आलिलिंग सर्वंचेदं देवकार्यप्रवृत्तत्वादस्येति भावः अत्रविशेषणमा त्रसाम्यादप्रस्तुतस्यगम्यत्वात्समासोक्तिरलंकारः तत्रचाप्रस्तुतयोर्भूमिसमुद्रयोः प्रतिपन्नाभ्यां नायकाभ्यां भेदे

अभेदलक्षणातिशयोक्तिवशादालिंगनोक्तिरितिरहस्यमेवमतिशयोक्त्यनुप्रणीतासमासोक्तिः प्रियकथना
स्नेहसुज्जीवयंतीतदंगभावंभजतइत्युभयोरंगांगिभावेनसंकरइतिविवेचनीयं ६० इतिश्रीमहोपाध्यायको
लाचलमल्लिनाथसूरिविरचितायांकिरातार्जुनीयव्याख्यायांघंटापथसमाख्यायांतृतीयःसर्गःसमाप्तः ॥ छ
हासर्गमुंबईंतबापूहरशेटदेवळेकरयांणींआपलेछापखान्यांतछापिला शके १७८३ दुर्मतिसं० आषाढवद्य २

